वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १५ | APRIL 1977 | क्रमांकः ४



नळ चैत्राङ्कः | शकाब्दाः १८९८ | मूल्यम् ०-५० पैसाः

# विषयसूचिका







# नूतन वर्षागमनम्

— जयेशः, पुसद् ।

सुस्वागतं नूतनवत्सराय,
आयाहि भो! नूतनवर्ष! शीघ्रम् ।
तव प्रसादेन सदा प्रयातु,
दारिद्र्यपीडा मनसो विकल्पः ॥

प्रयातु धर्मस्खलनं च दंभः,
प्रयातु मिथ्र्याभणनं च कृत्स्नम् ।
प्रयान्तु पापानि बहूनि यानि,
व्याधिः प्रयातु प्रन्नं सभं नः ॥

लंघन्तु जाल्माः निजदेशसीमाम्,
अज्ञानजन्यं तिमिरं प्रयातु ।
आयातु ज्ञानं विमलं प्रकामम्,
आयातु शीलं सततं समाजे ॥

आयातु सस्यं विपुलं प्रसन्नम्,
आयातु सौख्यं जनजीवनेषु ।
आयातु निष्ठा निजदेशकार्ये,
आयातु शांतिः जनरक्षणाय ॥



# सम्पादकीयम्

## भारते जनता - पक्षाधिकारः

'भारतीय जनजीवने १९७७ मार्च् मासः अत्यन्तं प्रमुखस्थान मभजत् । देश - विदेश - समीक्षका स्सर्वेऽपि भारतीय जनतायाः योग - क्षेम - विधि - विधाने महत्तरं परिवर्तन माशंसमानाः निर्वाचन फल प्रकटन निरीक्षणे प्रतिक्षणं प्रतीक्षमाणाश्च आसन्नित्यत्र नैव विप्रतिपत्तिः । घटनेयं ऐतिहासिकी समपद्यत। भारतीयजनता स्वाधिकारं समुचितविधानेन प्रदर्शितवती च । पक्षप्रतिपक्षनायका स्सर्वेऽपि सक्रमशिक्षणं स्वपरनिस्तारकं च विधान मवलम्ब्य कृतकृत्या बभूवुः । जयापजयौ तावत् राजनीतिक्षेत्रे प्रविष्टानां तेषां चिरपरिचितावेवेति न तत्र वक्तव्यतापेक्षा ।

अस्मिन् सन्दर्भे गैर्वाणी "अम्भोधिः स्थलतां स्थलं जलधितां" इत्यमुं श्लोकं स्मारयति । अम्भोधिः स्थलमासीत्स्थलं जलधिरासीत् । धूलीलवः शैलश्चेत्, मेरुर्मृत्कणः; तृणं कुलिशतां, वज्रं तृणप्रायतां च अभजत् । वह्निः शीतलोऽभवत्, हिमं दहनात्मकमासीत् । प्रभो रिच्छामात्रेण सृष्टिविपर्यासः शास्त्रैकसमधिगम्य इति मन्यमानः प्रत्यक्षमनुभूयते चाद्य । अधिकारपक्षः "शापेनाऽस्तंगमितमहिमा...." इत्युक्तरीत्या प्रतिपक्षस्थाने स्थापितः । प्रतिपक्षस्थानीयाः "संगच्छध्वं संवदध्वं ...." इति नोदिता समैक्यसंघटनेन अधिकारपक्षस्थाने नियोजिताः । इत्थमेव

,,ध्रुवा नीति र्मति र्मम'' इत्युक्तरीत्या भारतीय जनगण मनस्समुद्गता मतनिर्वाचन सरणिः ।

त्रिशद्वर्षाधिकारपक्षः कांग्रेस् प्रतिपक्षस्थानं स्वीकृत्य निर्माणात्मकं सहकारविधानं घोषयामास । लोकतन्त्रायत्ते अधिकारसंक्रमणे विश्वासः प्रकटितः । भारतराजनीते रिदं स्वस्थतायाः असाधारणं लक्षणमिति सम्भावनीयम् । जनतापक्षः दक्षिणाशावञ्चितो यद्यपि, तथाऽपि दाक्षिण्यरहितो मा भूदिति आशास्यते मेधाविभिः । भारते उत्तरदक्षिणयोः परस्परविरुद्धं प्रवृत्तिनिमित्तं किं वा भूयादिति ऊहागानं प्रवृत्तम् । समाधानं तावन्न सुलभम् ।

"मातृदेवो भव", पितृदेवो भव" इत्युभयविधाऽपि सूक्तिः श्रुतिरेव; नैव संशयः । दैवी भावना यदा प्रवर्तते, किं प्राधान्येन इति परिशीलनीयं भवति । शरीरधारण पोषणयोविषये मात्रा समं नाऽस्ति शुभानुचिन्तकम् । एवं ज्ञानविकासे धैर्यस्थैर्यादिगुणगणविषये पित्रा समं नाऽस्ति किञ्चिदात्मोद्धारकम् । त्रिशद्वर्षदेशीयस्य प्रजास्वाम्यस्य शरीरधारण - पोषण - कार्यकरणे निमग्नाऽसीत् कांग्रेस् - माता ।

प्रजास्वाम्यं नियंतृत्वाधीनं माऽभूदिति, "तदात्मानं सृजाम्यहं" इत्युक्तरीत्या भारतीयात्मोद्धरणाय जनतापक्षः प्रादुरासीत् । प्रतिष्ठितश्चाधिकारे । "उद्धरेदात्मनाऽत्मानं" इति सिद्धम् ।

भारतीयात्मोद्धरणेऽधिकृतः जनतापक्षः स्वावलम्बन विधानेन प्रवर्तताम्; अधिकारविहीना अपि प्रतिपक्षस्थानीयाः "सहनाववतु" इति सहकारमन्त्रं जपन्त स्सहकुर्युश्चेत् देशे सर्वत्र शान्तिः सुरक्षिता स्यात् ।



# शिशिरम्

—जयेशः, पुसद् ।

शशाङ्क पीयूष सुसिक्तागात्री,
असंख्य तारागण भूषिताऽपि ।
तुषारपातात् धृतशैत्यरात्रि –
र्न रोचते कामुक कामिनीभ्यः ।। १

प्रियंगुपुष्पं सुखदं न किञ्चित्,
शशाङ्कवक्त्रं तुदते कलत्रम् ।
मोदाय वायु र्न हिमांशुशीतः,
ग्लायन्ति सर्वे शिशिरागमेन ।। २

तुषार संघात निवारणाय,
विलेपनं शीतकरं विहाय ।
बहूनि वासांसि निधाय सुष्ठु,
पिनद्धजालप्रतिबद्धवायुम् ।। ३

कालागुरो र्धूपविसृष्टगन्धम्,
कामाग्निना दीप्त मिवान्तरंगम् ।
रयेण हर्म्यं प्रमदाः प्रयान्ति,
संगप्रियोक्ताः शिशिरागमेन ।। ४

दोलायमानं परिपक्वसस्यैः,
छायाश्रित क्रौंचरवेन रम्यम् ।
प्रियं प्रकामं प्रमदाजनाय,
प्रीणातु विश्वं शिशिरं समस्तम् ।। ५

# गान्धीकथा



बालगणपतिभट्ट:, श्रीरङ्गपत्तनम् ।

कर्मयोगिनः महात्मागान्धी महाभागस्य सूत्रनिर्माणचक्रे महती भक्तिरासीत्। भारतीयानामुद्धारार्थं, जीवनाधार हीनानां जीवनप्रदापनार्थं, अलसानां आलस्य दूरीकरणार्थं, उत्साहवर्धनञ्च एतस्य यन्त्रस्य प्रसारः प्रचारश्चावश्यकाविति महात्मनः आशयः। "प्रथमं कुरु पश्चाद्वद" इति स्वीयां नीतिघोषणां यदाऽनुसृत्य महात्मागान्धी महोदयः सूत्राणि स्वनिर्मिताभिरेव कार्पासवर्तिकाभिः सृजति स्म ।

जातु महात्मा सूत्ररचनार्थमुपाविशत् । यन्त्रपेटिकायां वर्तिका नाऽभवन् । तद्रचनार्थं कार्पासराशिरानीतः धनुरपि सिद्धमभवत् तूलताडनाय, तत्संस्करणाय च। किन्तु पुनः पुनः ताडित एव धनुस्सूत्रे तूलखण्डाः लगंति स्म । वर्तिकानां रचना दुर्भराऽभवत् । कारणमत्र तु शीतर्तुरासीत् । वायुरार्द्रश्च । धनुषः तन्त्री सर्वेऽपि कार्पासराशिः संश्लिष्टाऽभवत् ।

महात्मनः सेवाश्रद्धालुः सहचरी "मीराभगिनी" तदा तत्रैव तस्य पार्श्वे उपविष्टाऽऽसीत् । गान्धी महाभागस्य चिन्तां दृष्ट्वाऽब्रवीत् सा "यद्याज्ञा दीयते जम्बीरपत्राणि अद्यैवानयामि । धनुषः सूत्रे तेषां घर्षणेन भवतः अधुनातनं कष्टं परिहृतं भवेत्" इति ।

महानायकस्यानुमतिं लब्ध्वा मीरा सहसैववाटिकामाश्रमस्य गत्वा वृक्षस्यैकां शाखामानयत् ।

"महात्मन् ! एकं विटपमेव महान्त मानीतवत्यस्मि उपयोगार्थं भवतः कैंकर्यरूपेण। यथेच्छं उपयोगमस्य कुरुत" इति प्रार्थयामास च।

कार्येणानेन महात्मनः संतृप्ति कामयमाना निरीक्षिता च सा सहसा तस्यानने पीडामपश्यत् मीरा।

"मीरे! किं त्वया कृतम्? एकस्य मुष्टिमितस्य पत्रस्य कृते महती शाखैवैका खण्डिता। पश्यात्र सर्वाणि पत्राणि संपीडितानि सन्ति। एतेषां वेदनां म्लानतैव सुष्ठु कथयति"। इत्यात्मनः दुःखस्य निदानमब्रवीन्महात्मा।

"विटपिनोऽपि आत्मसदृशा जीविनः। तेऽपि पीडायां दुःखिनो भवन्ति। तेषां पीडनं पापम्"। इति नूतनं पूर्वाज्ञातं सन्देशं महात्मना दत्तं गृहीत्वा नितरां दुःखिता 'मीरा सहजाश्रुनयना लज्जावनतवदना चासीत्।



**नामपरिवर्तनम्**—

वर्षत्रयात्पूर्वं श्रीकाकुलमण्डलान्तर्गत बत्तिलिग्रामे स्थितस्य तदानीं इण्टरमीडियट् हिन्दीविशारदपरीक्षोत्तीर्णस्येदानीं काश्यां न्यायमध्यमातृतीयखण्डेऽधीयानस्य निम्नलिखितमन्दिरे निवसतश्च श्री कोट्नि नरसिंहपुत्र कृष्णाराव्नाम्नः १५-७-१९७३ दिनाङ्के श्रीमाधवचैतन्यभारतीस्वामिनां सकाशाद् नैष्ठिकब्रह्मचर्यदीक्षाग्रहणप्रसङ्गे कृष्णचैतन्यब्रह्मचारीति नूतननामकरणंकृतमासीदिति सर्वेषां विदितं भवतु।

8-3-77

इत्थं निवेदकः,<br>**दयानन्दब्रह्मचारी,**<br>श्रीमुकुटेश्वरमन्दिरम्,<br>B 17 / B, तिलभाण्डेश्वरवीथी,<br>वाराणस्याम्. उ. प्र. 221001

# वञ्चकाः स्वार्थमानिनः

ना. वा. निगमान्तः, प्रोद्दुटूरु ।

वृद्धः कश्चिन्माषापूपान्कण्डोले कृत्वा मन्दोष्णान् ।
गच्छन् शीर्षे निक्षिप्याभूत्प्रक्षीणाङ्गो वीथ्यां सायम् ॥ १

स्वेच्छंगच्छन्काकोऽपूपं वृक्षच्छायां प्रापच्छीघ्रम् ।
गृह्णन्कश्चिद्गन्धावासं जीनाज्ञातं वर्त्मन्येकम् ॥ २

जिह्वाचापल्यार्तस्त्वेकः क्रोष्टा तं दृष्ट्वा शाखाग्रे ।
नासाग्रेणादन्तं भक्ष्यं ध्वाङ्क्षं शाखिच्छायामैत्ताम् ॥ ३

पूपं हर्तुं नीचप्रज्ञो लोके सर्वं स्तोत्राधीनम् ।
सञ्चिन्त्यैवं क्षिप्रं काकं स्तोतुं गोमायुः प्रारेभे ॥ ४

मित्राद्यत्वां सौख्याधीनं मन्ये द्रष्टुं द्रागायातः ।
धन्यो मादृक्षो नास्त्यन्यः शङ्कालेशो नैवाऽत्राऽद्य ॥ ५

कण्ठो माधुर्यासिक्तोऽतो गीतं श्रोतुं ते काङ्क्षेऽहम् ।
त्वद्वक्त्रात्सञ्जातं स्निग्ध! व्यर्थां कुर्या मा मद्याच्ञाम्॥ ६

फेरुप्रोक्तां वाचं शृण्वन्मूर्खः काको व्यादायाऽस्यम् ।
काकेत्युच्चैः शब्दं चक्रे सद्योऽस्त्रं सद्वक्त्रात्पूपः ॥ ७

भूमौ क्षिप्तं माषापूपं क्रोष्टा वेगादादायैनम् ।
स्वैरं तुष्टोऽरिष्टो धावन्भक्ष्यत्यागात्प्राप्नोद्दुःखम् ॥ ८

# कविहृदयम्-३

— ना. व. निगमान्तः, प्रोद्दुटूरु ।

लोके तावद्युद्धं सर्वेषामप्यनिष्टं भाति । यः कोपि तन्नाभिलषति । प्रबलः शत्रुः यद्यस्मद्देशमाक्रमितुं प्रयतेत, तदा तदेवानिवार्यं अस्मदभिमतं च भवति। पूर्वं भटाः संयति खड्गतोमरादीनि प्रहरणान्युपयुञ्जते स्म । अद्य तु योधैः कालानुगुणं नानाविधाः नवनवाश्चायुधविशेषाः उपयुज्यन्ते । दूरस्थमपि रिपुं हन्तुं नलिकाख्यं (Gun) शस्त्रं शक्नोति । दण्डवद्दीर्घं कृष्णवर्णं च तदायुधं वर्त्या सन्धुक्ष्य ततो निर्गतैः कठिनैरयोगुलिकानिकरैः अभियातिं सुखेन घ्नन्ति योद्धारः । एतादृश मायोधनं मनुजानामिव ग्रीष्मप्रावृषोरपि कदाचिदजायत ।

ग्रीष्मे अत्युग्रो भवत्यातपः । अतश्च तदोष्णाधिक्यम् । प्रावृषि तु अतीव शैत्यमित्येतत्सर्वविदितम् । ततः ग्रीष्मस्य प्रत्यर्थी वर्षाकालः । अतः स्वशत्रुं नाशयितुं समयं प्रतीक्षमाणः वर्षर्तुनामकः कश्चन वीरो योधः झटिति शत्रुशैन्यं प्रविश्य सपत्नं लक्षीकृत्यावस्थापितात्, विद्युत्वर्त्या सङ्घट्टितात् नीलमेघावलीरूपात् नालास्त्रात् सशब्दं निस्सरद्भिः वर्षोपलरूप सीसगुलिकानिवहैः ग्रीष्माख्यं द्वेषिणं दूरादेवानायासेन हत्वा विजयी अभूत् ! अत एव तदा निदाघश्शान्तः । शैत्यमधिकं बभूव एवं विध नूतनयुद्धावेदकं भाव सुन्दरं पद्यरत्नमिदमेव —

कालाम्बुदासिनलिकात् क्षणदीप्तिवर्या
सन्धुक्षितात्सपदि सध्वनि निस्सरद्भिः ।
वर्षाश्मसीसगुलिकानिकरैः
घर्माभियाति मवधीत् घनकालयोधः ॥



# अद्यतन - विद्याभ्यासः – १

दीवि श्रीनिवासदीक्षितः, ताडिकोण्ड।

सोऽयं कुलपतेः कण्वस्य प्रशान्तपावनः आश्रमप्रदेशः। तत्र पश्यन्तु तरोरेकस्याधः स्थण्डिले निषण्णं आचार्यमेकम्। तदन्तिके एकः छात्रः। तौ अध्यापनं - अध्ययनं च आरभमाणौ प्रथमतः परमात्मानं एवं प्रार्थयेते।

'ओ ३ म् सह नाववतु। सह नौ भुनक्तु। सह वीर्यंकरवावहै।
तेजस्विनावधीतमस्तु। मा विद्विषावहै।
ओंशान्तिः शान्तिः शान्तिः।'

शिष्याचार्यौ नौ परब्रह्मविद्या रक्षतु। आवयोः परब्रह्मविद्या-सामर्थ्यं भवतु। आवाभ्या मधीतं आवयोस्तेजस्सम्पादकं भवतु। आवयो र्मानसं द्वेषादिभावनादूषितं मा भूत्। आध्यात्मिक - आधिभौतिक - आधिदैविकसन्तापापनोदने दक्षं भवतु।

एतादृशी पुरातनी गुरुशिष्यव्यवस्था। पुरा छात्राः गुरुकुलविलष्टाः भक्त्या श्रद्धया गुरुशुश्रूषया च विद्या मशिक्षिषत। तदानीन्तनगुरवोऽपि स्वशिष्येषु वात्सल्यभावकलिताः। अद्यतन-काले सा व्यवस्था अन्तर्हिता। पुरा गुरुशिष्यसम्बन्धः नीरक्षीर-न्यायानुसारकः। अद्य तु तिलतण्डुलसदृशः।

अद्यतनविद्याभ्यासः मायामोहजालपतितः। केवलं धनार्जन-मेव विद्याभ्यासस्य प्रयोजनमिति अद्यतनविद्यार्थिनां विद्या-र्थिनीनां च दृढाभिप्रायः।

**भ्रान्ताः भारतीयाः !**

वस्तुतस्तु अद्यतनशिक्षापद्धतिस्सर्वा अपि पाश्चात्यसभ्यतानुसारिणी एव। 'महत्तरप्रभावपूर्णा पाश्चात्यसभ्यता' इति भ्रान्ता भारतीयाः स्वसहज ज्ञानविक्रयकलालज्जात्याग भोगपरित्यक्ताः सर्वथा सर्वदा पाश्चात्यसभ्यतामनुसरन्ति। भारतीयाः उदारभावोदधेः स्वप्राचीन वाङ्मयस्य स्वकीयानां महत्तर धर्मवासनाभरित प्रत्नसम्प्रदायानां माहात्म्यं न जानन्तीति महान् विषादः। सर्वथा पाश्चात्यशिक्षासम्प्रदायबद्धाः अद्यतनभारतीयाः। एतत्पाश्चात्यव्यामोह बडिशस्थाः प्रायशः विद्यार्थिनः विद्यार्थिन्यश्च स्वतः भारतीया अपि पाश्चत्यवेषभाषासम्प्रदायकरणेन तद्विकृतय इव दृश्यन्ते। मध्यंदिन मार्ताण्डबिम्बं इव दिव्यतेजसां विकरणेन अन्यदेशीयानां मानसान्यावर्जितवती भारतीया सभ्यता अधुनाऽदृश्यतां गता।

**विद्यार्थिनां सच्चरित्रता —**

गुणगणरहिता अध्यापकाः, पाश्चात्यविज्ञानबोधकानि सदाचारशिक्षणविरहितानि पाठ्यपुस्तकानि, विद्यालयेषु दुष्टराजकीयप्रवेशः, चलच्चित्राणां अविरलप्रचारः, विलासवस्तुबाहुल्यं, असभ्यशृङ्गारबहुलगीतानां सर्वदा आकाशवाणी दूरश्रवणयन्त्रद्वारा श्रवणं मननं चेति सन्त्यनेककारणानि विद्यार्थिनां चरित्रहीनतायाम्।

मानवजीवने अन्यदशापेक्षया विद्यार्थिदशा परमोत्कृष्टा। अस्मिन्नेव समये भाविजीवनस्य कृते शक्तिसञ्चयः क्रियते। भाविजीवनस्य सफलता असफलता वा अस्या एव अवस्थाया उपरि निर्भरा भवति। अत एवेयं मानवजीवनस्य प्राभातिकी वेला।

**महादुर्गघट्टनयत्नः ! !**

अस्मिन् काले विद्यार्थिनः महोत्साहेन चरन्तः अपि कलाशालाप्रवेशविषये महतीं भीतिं प्राप्नुवन्ति। महत्तपः आचरन्ति। यतः —

यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम्।
तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम्॥

इति मनीषिणां माननीयस्य मनो वचनम्। नो चेत् कलाशालाप्रवेशः अतीव दुष्करः। कलाशालाप्रवेशयत्नः महादुर्गघट्टनयत्नसदृशः एतन्महायुद्धे बहवः बलहीनाः [धन - अनुग्रह (Recommendation) विहीनाः] पतन्ति। न हि म्रियन्ते। केचिद्बलवन्तः धन - तत्तत्कलाशाला पालकवर्गसभ्यानां सुहृद्बन्धुसाहाय्येन च दुर्गे प्रविशन्ति। नूतनविषये (Course) प्रवेशः संकुलसमर इव परिणमति। केचिद्विद्यार्थिनः बहुवत्सरपर्यन्तं प्रवेशाय प्रयत्य विफलमनोरथाः चिन्ताक्रान्तमानसाश्च भवन्ति। शतसंख्याक परिमितिः प्रवेशाय चेत्, सहस्रसंख्याका अभ्यर्थिनः। एतेषु विजयकुमाराः केचिदेव। प्रवेशमलभमानाः अनेके उन्मादिनः भवन्ति। आत्महत्यामाचरन्ति अपरे। हृदयविदारकपरिस्थितिरियम्। अहो विचित्रा दैवी गतिः !

**कलाशालानामनेकता —**

विरलता 'उपायन स्वीकार' (donation) कलाशालानाम्। 'उपायनरहित' कलाशालानामविरलता। 'विराल' (Donation) कलाशालासु विद्यार्थिनां विद्यार्थिनीनां च उपायनस्वीकारस्पर्धा। न हि विद्यास्पर्धा। भाग्यवन्तः एव प्रायशः अस्यां स्पर्धायां प्रविशन्ति।

निर्भाग्यानां एतादृशस्पर्धा प्रवेशार्हता नास्ति खलु। ततः दूरादेव तां कलाशालां प्रणमन्ति। एतेषां 'अविरल' कलाशाला कल्पवल्ली। किन्तु 'अविराल' कलाशालानामविरलता खलु।

**श्रेणी प्राधान्यम्........**

अद्यतनविद्याविधाने श्रेणीप्राधान्यमेव। न तु वाणी-प्राधान्यम्। बहवो विद्यार्थिनः परिश्रमेण न विद्या मभ्यसन्ति। इतस्ततः वृथा चरन्ति। निरर्थकं बहु जल्पन्ति। यथासुखं शेरते। एवं कालं यापयन्ति। परीक्षासमये समासन्ने अनेका-सन्मार्गावलम्बका भवन्ति! धनप्रदानादि नीचमार्गानुसारेण प्रथम-द्वितीयश्रेणीं लभन्ते। केचिदेव विद्यावन्तः साधारणतया उत्तीर्णा भवन्ति। प्रथमद्वितीयश्रेण्योः उत्तीर्णा एव कलाशालाध्यापक-पदग्रहणे समर्थाः। तस्मात् सर्वे उत्तमश्रेणीं प्राप्तुं प्रयतन्ते यथा कथञ्चित्।

**परीक्षापरम्परा —**

पञ्चमकक्ष्यातः पाठशालाविद्या। षष्ठकक्ष्याप्रभृति दशम-कक्ष्यापर्यन्तं उन्नतपाठशालाविद्या। सप्तमकक्ष्यायां प्रभुत्वपरीक्षा प्रवेशिता। अष्टमनवमकक्ष्ययोः विरामः। पुनः दशमकक्ष्यायां संसिद्धः कषः। ततः कलाशालायां प्रतिवत्सरं परीक्षाः। एतादृशपरीक्षापरम्परा विद्यार्थिनां भयापनोदनक्षमा। श्रद्धा नास्ति। नास्ति स्पर्धा। दीक्षा नास्ति।

**बाधामयगाथाः!!**

विपत्करकालेऽस्मिन् स्वतनयानध्यापयितुं क्लिष्टकष्टा-न्यनेकान्यनुभूयन्ते पितृभिः।

'पत्तने विद्याभ्यासः। अट्टशूले (hotel) भोजनम्। वसतिगृहे वासः। अत्यधिकमूल्यक्रेय कक्ष्या पुस्तकसन्दोहः। तत्तत्कालानुगुण वस्त्र चित्रविचित्रधारणम्। नागरिकतासम्पादकधूमपानव्यासङ्गः। सुहृद्भिस्साकं वारं वारं चलच्चित्रदर्शनव्यामोहः। ततः परीक्षासमये समासन्ने एव विद्याध्ययनविषयालोचनम्।

एषा दशा पल्लीनिवासिनां निरन्तरकेदारकर्षणासक्तचित्तानां कर्षकाणां पुत्रविषयिका।

अपरा कथा.........

अपरा अवस्था नागरिकपितृसम्बधिनी — "नगरे साधारणोद्योगी पिता कश्चित्। स्वकुटुम्बपोषणे रतः स पिता निरन्तरजीवनसंग्रामकरणशीलः। स्वभृतिः (वेतनं) स्वकुटुम्बपोषणे एवाऽक्षमा। तथाऽपि यथाकथञ्चित् क्षमया कालं यापयति। तस्य पुत्रः दशमकक्ष्यायां अधीते। स पुत्रः पितरं (cycle) ययाचे।

अतिथि र्बालकश्चैव स्त्रीजनो नृपतिस्तथा।
एते वित्तं न जानन्ति जामाता चैव पञ्चमः॥

पिता तु क्रेतु मशक्तः। तदेव प्रकटीचकार। द्वितीयः पुत्रः (intermediate) विद्यार्थी। सः असंस्कृतकेशपंक्त्या चलच्चित्रगानरतः सदा चरति वीथीषु। वीथ्यां वीथ्यां वीक्षते विद्यार्थिनीबृन्दम्। निरीक्षते नितम्बिनीकटाक्षप्रसारम्। परिहसति शिक्षावन्तं श्रोत्रियम्। स कदा विद्यामभ्यसतीति प्रत्युत्तररहितः प्रश्नः। एवं भ्रष्टं पतितं स्वतनयं विलोक्य बाधाकृष्टहृदयः प्राचीनसम्प्रदायानुप्राणितात्मा स पिता एव सप्राक्षीत् सगद्गदम्।

**शिष्टं तदपि नेच्छन्ति —**

'अरे! अप्यस्माकमियं संस्कृतिः? किमास्माकीनोऽयं सम्प्रदायः? रे! अस्वतन्त्रा वयम्। अद्यापि भारतजननी शृंखलाबद्धा एव। षड्विंशतिवत्सराणां प्राक् व्यसृजन् आंग्लेया भारतदेशम्। किन्तु अद्यापि षड्विंशत्यक्षरपरिमितांग्लभाषा भारतीयान् पालयति निरातङ्कम्। नाशयति नागरिकतामस्माकम्। परिहसति अस्माकं पौरातन्यजीवनव्यवस्थाम्। वयमसमर्थाः किमु? वयमविवेकिनः? उत पौरुषहीनाः? पाश्चात्यसंस्कृते र्दासाः अद्याऽपि।'

पुत्रः धारावाहिकोपन्यसमेनं निशम्य भवतोक्तवचनानि अरुच्यानि। 'इयमेव नागरिकताऽद्य। इयमेव संस्कृतिः। न शृणोमि भवतां वचांसि इत्युक्त्वा हिन्दी चलच्चित्रगीतं गायन् गतः।

**प्राच्यकलाशालानां व्यवस्था —**

पुरा कृष्णवेणी - गोदावरीत्यादि नद्यः नौकाभिस्तरितुं शक्याः। समुद्रो नाम अतिविस्तीर्णः अदृश्यमानपारः सुतरां अगाधोऽम्भसां राशिः। अपि च कल्लोलैराकुलः। स्वतः पारावारस्तु नौभि स्तरितुं न शक्यः। अतस्तत्र प्रवहणैः सञ्चरिता जनाः। वायुना नीयमानान्येव प्रवहणानि पुरा। अधुना बाष्पशक्त्या चाल्यमानानि, प्रवहणानि प्रयुज्यन्ते। वायुना प्रेर्यमाणं प्रवहणं कदाचित् वात्याभिहतं (Strong wind) निमज्जेदपि। कुल्यास्तरितुं उपयुक्तः कोलः[1]। एतान्युपकरणानि जलतरणे प्राचीनकाले। कुल्यासु ग्रामात् ग्रामं प्रयातुं 'तरान्धवः'[2] उपयुक्ताः जनैः पुरा। तत्तद्ग्रामजनाकर्षणाय कर्णधाराणां मध्ये स्पर्धा संवृत्ता। 'केनचिन्नाविकेन स्वतरण्यधिष्ठितजनानां कदलीफलानि उपायनीकृतानि चेत्; अपरेण कर्णधारेण आम्रफलानि बहूकृतानि स्युः। नौकाधिष्ठितकुटुम्बस्य पनसफलानि। बालानां बदरीफलानि।'

एतादृशी एव अद्यतनप्राच्यकलाशालानां व्यवस्था। प्राच्यभाषाविद्यालयेषु विद्यार्थिनां वेतनानि (Schlor ships) दीयन्ते। किन्तु विद्यालयाध्यापकाः विद्यार्थिनः विचिन्वन्ति। वसतिगृहमुचितम्। विद्यालयप्रवेशोऽप्युचितः। तथाऽपि विद्यार्थिनां विरलता प्राच्यकलाशालासु।

**किं किं न साधयति —**

केषुचित् दक्षिणभारतीयदेवालयेषु बहुविधमधुरभक्ष्याणि परिकल्प्य भगवते निवेदितानि भक्तेभ्यः प्रसादरूपेण यच्छन्ति अर्चकाः। प्रायशः अस्मद्गृहेषु कल्पित मधुरभक्ष्याणि पिपीलिका आक्रामन्ति खलु। यत्र यत्र मधुरपदर्थास्तत्र तत्र पिपीलिका वसन्तीति व्याप्तिः। किन्तु तद्देवालयेषु मधुरपदार्थान् पिपीलिका न स्पृशन्तीति महदाश्चर्यम्। तदेव 'चिदम्बररहस्यम्'।

देवालयस्य मध्यभागे कटान् प्रसार्य तेषामुपरि मधुरभक्ष्याणि निक्षिपन्ति। तेषां कटानां परितः किञ्चिद्दूरे शर्करां विकिरन्ति। तदा पिपीलिकाः परितः स्थितां शर्करामेव भोक्ष्यन्ति। न हि स्पृशन्ति मधुरभक्ष्याणि।

परितः निक्षिप्तशर्करया तृष्टा पिपीलिका इव अद्यतनविद्यार्थिनः अपि उद्योगप्राप्त्या संतुष्टा भवन्ति। विद्याध्ययनकाले एव उद्योगान्वेषणतत्पराः अद्यतनविद्यार्थिनः। विद्यायाः महत्तरप्रयोजनमस्ति। तं न जानन्ति छात्राः। संस्कृतेः सम्प्रदायस्य च परिरक्षिणी, लोककल्याणकरी, सन्मार्गप्रदर्शनी करदीपिका, कीर्तिवितरणशीला ........ किं बहुना ........ विद्या कल्पलता। विद्या कामधेनुः। परिशिष्टा विशेषाः पुनर्दर्शने ..........

---

1. कोलः = Raft.
2. तरान्धुः = A large flat bottomed boat.

षष्ठपुण्यतिथिप्रीत्यर्थम् —

# कृतकृत्यकुलपतिः

— या. वि. देवास्करः, बटोदरस्थः ।

मासे दिसंबरे जाता दिने[1] त्रिंशत्तमे तथा ।
मुन्शीमहोदयाः सत्यमगाधगुणसागराः ।। १

विरोधाभासभव्यास्ते विद्याभवनकारकाः ।
विद्याप्रिया महन्मान्या राजकार्यधुरन्धराः ।। २

नानाभाषाप्रभुत्वेन, ते प्रीत्या संस्कृतेस्तथा ।
प्रकाण्डपण्डितानन्यान् विदुषश्चातिशेरते ।। ३

विधिज्ञा[2] विधिकर्तारो[3] *तयासन् विधिभञ्जकाः[4] ।
पारंपर्ये[4] मतिस्तेषामिदानींतनवादिनाम्[5] ।। ४

रतास्ते सुरभारत्यां रतिस्तेषां हि भारते ।
तत्समः प्रतिभावांश्च, न भूतो न भविष्यति ।। ५

माघमासि[6] सिते पक्षे त्रयोदश्यां तिथौ तथा ।
पञ्चत्वमगमन् प्राज्ञा कुलपतिमहाशयाः ।। ६

---

(1) His borth date is 30-12-1887, (2) विधिज्ञ = A lawyer, (3) a law - maker, (4) a law - breaker, (5) He was a Traditionalist as well as a Modernist, (6) He left this world on 8-2-1971.

* तथयासन् = ते आसन् ।

# अलंकारसंज्ञानां अन्वर्थत्वविचारः

श्रिष्ट लक्ष्मीकुमारशर्मा, P. O. L.,
न्यायसाहित्य विद्याप्रवीणः, शिक्षाशास्त्री, जिल्लेल्लमूडि।

लोके बहवस्संज्ञाः अस्माकं व्यवहार विषयाः वर्तन्ते। तत्र काश्चन संज्ञाः केवलं सङ्केतविषयाः। यथा पाचकसंज्ञा अन्वर्था, वस्तुतस्तस्य पाककर्तृत्वात्। मण्यादयस्तु संज्ञाः सङ्केतविषया एव। एवं शास्त्रेष्वपि व्याकरणादिषु सर्वनामाद्यर्थकाः सर्वनामादि संज्ञाः अन्वर्थाः। वृध्यादयस्तु संज्ञाः अन्वर्थतारहिताः दृश्यन्ते। अपादानादि संज्ञाः किमन्वर्थाः? अहोस्वित् केवलपाणिनिसङ्केत-विषयाः इत्यत्र अस्तु नाम विप्रतिपत्तिः।

एवं इतरसंज्ञासु अन्वर्थानां तथा अन्वर्थतारहितानां च दर्शनात् जायते सन्देहः किमलङ्कारशास्त्रीयाः उपमाद्यलङ्कार-संज्ञाः पाचकादिवदन्वर्थाः? आहोस्वित् मण्यादिवत् रूढिमात्र प्रधानाः? इति।

अन्वर्था अलङ्कार संज्ञाः इति समाधिः। कथम्?

"नान्वेतीत्यनन्वयः" "उपमेयेन उपमा उपमेयोपमा" किमियं संप्रदायादनपेता सरणिः?

'ओम्' इति ब्रूमः। कथम्?

साहित्यपयोनिधि मथन दक्षैर्दीक्षितैरेव चित्रमीमांसायाम् —

उपमेयोपमाप्रकरणे —
"परस्परतुलामित्यनेन द्वयोरपि परस्परप्रतियोगित्वस्याऽपि प्रतिपाद्यमानतया उपमेयेन उपमा इत्यवयवार्थस्य अविशिष्टत्वात् इत्यभ्यधायि।

एव मनन्वयालङ्कार प्रकरणे "स्वस्य स्वेनोपमा बोध्या अनुगाम्येकधर्मिका" इति स्वय मनन्वयलक्षणमभिधाय —

'अन्वर्थनामधेयोऽयं अनन्वय इतीरितः' इति त एव अनन्वयस्य अन्वर्थनामधेयत्वं आहुः। वक्तव्या पुनरुपमेयोपमायाः अन्वर्थं संज्ञा या दीक्षितपादैरभिहिता।

उच्यते — उपमेयेन उपमा उपमेयोपमा इति। तर्ह्यत्र मनाक् पूरणीयांशः अस्ति। किमिति?

उपमेयेनाप्युपमेति। किमर्थम्?

अन्यथा मुखं चन्द्रः इति प्रतीपेऽपि उपमेयेन मुखेन उपमानस्य चन्द्रस्य सादृश्य वर्णनात् 'उपमेयेन उपमा' इति योगार्थसद्भावात् प्रतीपमप्युपमेयोपमा स्यात्।

भवतु तावत् उपमेयेनाप्युपमा उपमेयोपमा इत्यन्वर्थं संज्ञा।

एवमलंकार संज्ञानां अन्वर्थत्वे दीक्षितवचनमेव प्रमाणम्? अहोस्वित् वर्तते कापि युक्तिरिति चेत् — वर्तते।

तथाहि — यदीमाः अन्वर्थतारहिताः एव संज्ञाः तर्हि अनन्वयि सादृश्य निबन्धनात्मकस्य अनन्वयस्य उपमेयोपमात्वं, उपमेयेनाप्युपमायाः अनन्वयत्वं च स्यात्। इष्टापत्तिरेवेति चेत् सर्वालङ्कारिक व्यवहारविच्छेदस्तु सह्यो भवति।

एवं अलङ्कारसंज्ञाः सर्वा एव अन्वर्थाः? किं तर्हि कतिपय-संज्ञा एव? इति चेत् ।

असति बाधके सर्वासां संज्ञानां अन्वर्थत्वस्य स्वीकारात् सामान्यतया अन्वर्था एव । विशेषतस्तु?

अन्वर्थतारहिता अपि अलङ्कारसंज्ञाः; यत्र बाधको-पलब्धिः ।

किमलङ्कार संज्ञानां अन्वर्थत्वेऽपि बाधकमस्ति? आं, अस्ति । कथमितिचेत् इत्थम् — 'यस्मिन् विशेष सामान्य विशेषाः स विकस्वरः' अत्र का वा विकस्वरशब्दस्य अन्वर्थता ।

कथं वा लेशादीनां अन्वर्थता? तत्र क्लिष्टव्युत्पत्तिकल्पना-पेक्षया तासां अलङ्कार संज्ञानां रूढि गोचरत्व स्वीकार एव उचितः । एवं तर्हि उपमा - उपमेयोपमा - अनन्वयादीनां संज्ञानां अन्वर्थत्वं, लेश-विकस्वरादीनां संज्ञानां तु तत्तदालङ्कारिक संकेतमात्र विषयत्वमिति पर्यवस्यति । तर्हि किमासीत् इति चेत् – उच्यते —

रजोभिः स्यन्दनोद्धूतैः गजैश्च घनसन्निभैः ।
भुवस्स्थलमिव व्योम्नः कुर्वन् व्योमेव भूतलम् ॥

इति दीक्षितैरुक्तायां परस्परोपमायां उपमेयस्य व्योम्नः उपमानेन भूस्थलेन पुन रुपमेयस्य भूस्थलस्य उपमानेन व्योम-पदार्थेन च साम्यस्य वर्णनात् दीक्षितपादोक्तस्य उपमेयोपमा योगार्थस्य अत्र सद्भावात् इयमुपमेयोपमैवेति प्राचीनोपमेयोपमा-लक्षणस्य अत्र अतिव्याप्ति प्रतिपादन परदीक्षितपादग्रंथस्य असां-गत्यं स्पष्टं, इति कथयन्नयं क्षन्तव्यः ।

न च वाच्यं, उपमेयोपमायां तृतीय सब्रह्मचारि निवृत्ति-रावश्यकी इति। तथा योगार्थाभावात्। न हि तृतीय सब्रह्मचारि निवृत्तावेव उपमेयोपमेति कुलधर्मः। सा च तृतीय सब्रह्मचारि व्यावृत्तिः तदा संभवति यदा उपमाद्वयनिर्वाहकः धर्मः एक स्सम्भवति। यथा — "धर्मोर्थ इव पूर्णश्रीः, अर्थो धर्म इव त्वयि" इत्यादौ।

धर्मभेदेन उपमाद्वय निर्वाहे तु - न संभवति - यथा — रजोभिःस्यंदनोद्धृतैरिति पद्ये —।

नचैवं सति, द्वितीय सब्रह्मचारि निवृत्तेरभावेऽपि अनन्वय व्यवहारापत्तिरितिवाच्यम्। उच्यतां, यदि सादृश्यफलाभावेऽपि अनन्वय पदयोगार्थस्स्यात्, तदेवतु न पश्यामः। अनन्वित-सादृश्य प्रतिपादनं ह्यनन्वयः। तत् यद्यभ्युपगम्यते तदा द्वितीय सदृशव्यवच्छेदोऽल्पं फलमप्यभ्युपगतं भवति। अभिन्नधर्मं विना अनन्वयि सादृश्य निबन्धनासंगतेः। अभिन्नधर्मेण सादृश्ये निबद्धे तु द्वितीय सब्रह्मचारि निवृत्ति स्सिद्धैव।

नचैवं उपमेयेनाप्युपमानिर्वाहे तृतीय सब्रह्मचारिव्यावृत्ति रंगीकृतैवेति चेत् — सत्यं, अङ्गीकृतं तत्फलं, कुत्र? यत्राभिन्नो-धर्मः पर्यायेण सादृश्यं न निर्वहति। अथ यदि भिन्नो धर्मः पर्यायेण सादृश्यं न निर्वहति, तत्र धर्मद्वयेनापि द्वयोः सादृश्य वर्णनं कवे-रभीप्सितमिति न तत्र तृतीय सब्रह्मचारि व्यवच्छेदः फलम्। अनन्वये तु योगार्थोपपत्तिरपि द्वितीय सब्रह्मचारि व्यावृत्तावेवेति तत्र द्वितीय सब्रह्मचारि व्यावृत्तिरपरिहार्यं फलम्।

अमुमेवार्थं मनसि निधाय विद्यानाथाः प्रतापरुद्रीये अनन्वया-लङ्कार - विवरणे — यत्र द्वितीय सब्रह्मचारि व्यावृत्यर्थमेक-

स्यैवोपमानोपमेयभावः निबध्यते; असावनन्वयालङ्कार इति अनन्वये द्वितीय सदृश वस्तुव्यवच्छेदः कण्ठतः कथयन्तोऽपि —

**उपमेयोपमालक्षणे —**

तस्मिन्नत्युपमानोपमेयत्वपरामर्शः इत्येव विवृण्वति । न तु तृतीय सदृशव्यवच्छेदं उपमेयोपमाफलत्वेन कथयति ।

ततश्च उपमेयोपमायां क्वचित् तृतीय सब्रह्मचारि व्यवच्छेदस्य अभावेऽप्यक्षतेः "रजोभिस्स्यन्दनोद्धूतै"रिति पद्ये उपमेयोपमावयवार्थस्य सद्भावेन तत्राप्युपमेयोपमैवेति, परस्परोपमेति मत्वा तत्र प्राचीनोक्त उपमेयोपमालक्षणस्य अतिव्याप्तेः कथनं निरपराधेषु पाषणप्रक्षेपतुल्यमिति उपमाद्यलङ्काराणां अन्वर्थ संज्ञात्वपक्षः निरूपयतीत्यलमतिविस्तरेण ।



**गणेशस्तुतिः —**

वन्दे बन्दारुमन्दारमिन्दुभूषणनन्दनम् ।
अमन्दानन्दसन्दोहबन्धुरं सिन्दुराननम् ॥

आलम्बे जगदालम्बे हेरम्बचरणाम्बुजे ।
शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः ॥

गजाननाय महसे प्रत्यहं तिमिरच्छिदे ।
आपारकरुणापूरतरङ्गितदृशे नमः ॥

नमस्तस्मै गणेशाय यत्कण्ठः दुष्करायते ।
मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे ॥

चित्तूरु लोकसभा सभ्यः

## श्री पि. राजगोपालनायुडुमहोदयः

राजनैतिकक्षेत्रे सेवा मातन्वानाः प्रायेण साहित्यक्षेत्रे विरलाः स्युः। चित्तूरु लोकसभासभ्यनिर्वाचने जनाः श्रीमतां पि. राजगोपालनायुडुमहोदयानां निजप्रातिनिध्यं समार्पयन्निति सविशेषं सप्रमोदं निजहर्षप्रकर्षं प्रकटयितुं समुचितोऽत्रकाशः सम्प्राप्तः नः संस्कृतभाषाप्रचारिण्याः सभायाः कार्यकर्तॄणाम्।

अयं महोदयः सभायाः उपाध्यक्षः; बहुमुखप्रज्ञाशाली, उपाध्यायाना मात्मबन्धुः, कलाकाराणामाशाज्योतिः, साहित्यक्षेत्रे सर्वतोमुखरचनानिपुणः, निस्स्वार्थप्रजासेवाधुरन्धरः, साधुस्वभावः अन्ते, मर्यादानां च पालकः। अयं ४० चत्वारिंशद्वर्षेभ्यः प्राक् महात्मनः गान्धिमहोदयस्य आह्वानं पुरस्कृत्य स्वतन्त्र्योद्यमे प्रविष्टः। पत्रिकासम्पादने साहितीसमितिनिर्माणे कृषकसंघसंक्षेमोद्यमे च बद्धादरोऽभवत्। चितूरुजिल्ला कलापरिषदध्यक्षोभूत्वा कवीन् रचयितॄन् नटान् गायकान् चित्रकारान् शिल्पिनः पण्डितांश्च प्रोत्साहयामास। चितूरुजिल्ला रचयितृमहासभानिर्वहणे दीक्षितोऽभवत्। आन्ध्रप्रदेशीय राज्यसभासभ्यत्वेन प्रजाप्रतिनिधि रयं महोदयः १९७७ मार्च् मासे प्रवृत्ते लोकसभा निर्वाचने चित्तूरु नियोजकवर्गात् लोकसभासभ्यतया निर्वाचित इति सादरानन्दं अभिनन्द्यते "गैर्वाण्या" समुत्कृष्टसेवापरायणः शरदश्शतं जीयादिति।

"भवरः"

# शुचीन्द्रस्थलमाहात्म्यम्

श्री पि. परमेश्वरशर्मा

सदनुविधिहरीशाश्चात्रिणा तत्पुरन्ध्या,
समममरनिकायेनादरान्नारदोक्त्या ।
निजनिजपरिवारैरन्विता यज्ञतीर्था –
न्तिकभुवि निवसन्तीं द्रष्टु मम्बा स्समीयुः ॥ १

अमरपुरतटिन्या स्तीर्थतोये निमज्य,
व्रतमिह तुहिनाद्रे र्यत्र पुत्री चरन्ती ।
अतुहिनकरकन्या तीर्थवर्येऽब्धिकन्या,
सरसि च निजनाम्ना संयुते भारती सा ॥ २

त्वरित ममरवर्या स्तत्र गत्वाथ तासां,
प्रददु रुषसि चार्द्राभे महद्दर्शनं ते ।
निजपतिभिरुपेता श्शैलराजात्मजाद्या
बभुरलममरेन्द्रा लेभिरे सान्द्रमोदम् ॥ ३

निज निज दयिताढ्यान् स्वस्ववाहाधिरूढान्,
विधिहरिपरमेशान् दंपती तान् समीक्ष्य ।
प्रमदभर परीतौ प्रार्थयामासतु स्तौ,
पदतलकमलान्ते संप्रणम्यातिभक्त्या ॥ ४

इह भवत जनानामप्यमीषां सुरेशाः,
प्रतिदिनभजनार्थं सुस्थिरास्त्वेवमेव ।

अवनिवसतिभाज स्सेवया वः पुमर्थान्,
वयमिव हि लभन्तां तेऽपि युष्मत्प्रसादात् ॥ ५

इति मुनिवरवाचं शुश्रुवांस स्सुरेशा,
वयमिह परिपूज्याः पिप्पलाकारभाजः ।
अमरममृतलिङ्गं त्वस्मदाकारमाद्य,
परिचर मुनिवर्ये त्यूचिरेजैशाच्युतेशाः ॥ ६

वयमयि मुनिवर्य त्वत्कुले चन्द्रदत्ता,
वितिच तदनु दुर्वासास्त्विवति प्राप्य जन्म ।
अनवरतमुपास्ति कुर्महेऽस्मत्स्वरूपे,
विभुधमुनिगणानां प्रार्थनाद्दिव्यलिङ्ग ॥ ७

वयमृषिकुल मौले सप्तसंख्यान्वितानां,
अभिलषितमिदानीं दातुकामा मुनीनाम् ।
परममयि गमिष्याम्येहि तत्र त्वमस्मान्,
भज मनसि यदिष्टं साधयास्मत्तदाशु ॥ ८

इति विबुधवराणां शुश्रुवान् कर्णयुग्मा
मृतगिरमिति तेषा मत्रिरानन्दपूर्णः ।
हृदय सरसिजे तान् ब्रह्मविष्णिवन्दुचूडान्,
सततमपि दधान स्तस्थिवां स्तत्र तावत् ॥ ९

तदनु मुनिवरेण्यस्यांघ्रि भक्ति स्वभर्तु
स्सपदि वृतवती तान् साऽनसूया सुसाध्वी ।
अभिलषितममुष्ये ते ददुस्तादृगत्रे,
रुटजवरगृहास्मान् पालयापत्ततिभ्यः ॥ १०

# व्याकरणशास्त्रप्रयोजनानि

**श्रिष्टि वेङ्कटलक्ष्मीनारायणशर्मा**, महानन्दि ।

व्याक्रियन्ते = साधुत्वेन व्यख्यायन्ते शब्दाः अनेन इति विग्रहे वि. आङ् इत्युपसर्गद्वयपूर्वकात् कृञ् धातोः करणार्थे "ल्युट् च" इति सूत्रेण ल्युटि व्याकरणमिति भवति । येन शास्त्रेण असाधुशब्देभ्यः साधुशब्दाः विविच्य प्रदर्श्यन्ते — तत् शास्त्रं व्याकरणशास्त्रमित्युच्यते । पाणिनिसूत्राणि वररुचि-वार्तिकानि पतञ्जलिव्याख्यानं सर्वं व्याकरणमित्युच्यते । कदा-चित् एकं सूत्रं केवलं वार्तिकमपि व्याकरणमित्युच्यते । यथा प्रपञ्चस्थितं सर्वं तैलं अपि तैलमित्युच्यते; न तु तैलावयवः इति तथा सूत्रं - पदविभागः, व्याख्यानं, उदाहरणं, प्रत्युदाहरणं सर्वं व्याकरणशब्देन उक्तमपि एकदेशं सूत्रमपि व्याकरणमित्युच्यते । निरुक्त व्युत्पत्ति पुरस्कृत्य व्याकरणं साधुशब्दप्रतिपादकं इति ज्ञायते ।

ननु साधुशब्देभ्यः असाधुशब्देभ्यश्च अर्थज्ञाने समाने सति किमर्थ मध्येयं व्याकरणं इति चेत् —

न । "रक्षोहागमलघ्वसंदेहाः प्रयोजनम्" इति भाष्य-कारेण प्रयोजनानां उक्तत्वात् । (१) वेदरक्षा, (२) ऊहः, (३) आगमः, (४) लघु, (५) असन्देहः इति पञ्च प्रयोजनानि । रक्षा च, ऊहश्च, आगमश्च, लघु च, असन्देहश्च, रक्षोहागमलघ्व-सन्देहाः प्रयोजनी च, प्रयोजनश्च, प्रयोजनश्च, प्रयोजनं च, प्रयोजनश्च इति पञ्चप्रयोजनशब्दानां "नपुंसकमनपुंसकेन एक-

वच्चास्यान्यतरस्याम्" इति सूत्रेण एकशेषे एकवद्भावे च प्रयोजन-मिति साधु ।

१. रक्षा —

व्याकरणं वेदस्य मुखस्थानीयं अङ्गम् । अतः वेदरक्षणं व्याकरणेन क्रियते । वेदे क्वचित् आगमाः आदेशाः लोकविलक्षण-तया दृश्यन्ते । लोके "अगृह्णन्" इति स्थिते वेदे "अगृभ्णन्" इति वर्तते । तादृशभेदं वैयाकरण एव जानाति । अवैयाकर-णस्तु लोकप्रयोगानुसारेण वेदपाठमपि अन्यथा परिवर्तयितुं उद्युङ्क्ते । तथा परिवर्तने महादोषभाक् भवति । इत्यतः वेदरक्षा व्याकरणस्य प्रयोजनम् । एवं —

वेदे — लोके
हस्तासः — हस्ताः
कर्णेभिः — कर्णैः

२. ऊहः —

प्रकृतियागस्थमन्त्रानुसारेण विकृतियागे अन्यदेवता विषय-कतया ऊहनं ऊहः – सांगोपदेशः यत्र वर्तते, सः प्रकृतियागः । प्रकृतियागे "सूर्याय त्वा जुष्टं निर्वपामि" इति वर्तते । विकृति-यागे अग्निदेवताकत्वेन परिणामं कृत्वा "अग्नये त्वा" इत्यादि वदेत् । अवैयाकरणस्तु सूर्याय इतिवत् "अग्नाय" इति ऊहते । वैयाकरणस्तु सम्यक् ऊहितुं पारयति । यागे अपभाषणं न कुर्यात् । इकारान्तशब्दस्य चतुर्थीविभक्तौ प्रक्रिया एवं इति वैयाकरणः जानाति । अतः ऊहार्थं अध्येयं व्याकरणम् ।

३. आगमः —

"ब्राह्मणेन निष्कारणः धर्मः षडंगो वेदोऽध्येयः ज्ञेयश्च" इति श्रुतिः षडङ्गसहितं वेदं पठेत् । अर्थं च जानीयात् । किमर्थं-

मध्येयं? इति कारणप्रश्नं विना कुर्यात् सः धर्मम् । वेदाङ्गेषु प्रधानं व्याकरणम् । प्रधाने कृतः श्रमः इतरांगेषु इतरशास्त्रेषु च उपकरोति । अतः तादृश श्रुत्युक्त विषय परिपालनार्थं व्याकरणं अध्येयम् ।

४. लघु —

लाघवेन = लघूपायेन सकल शब्दज्ञानार्थं व्याकरणं अध्येयम्। व्याकरणं विना येन केनाप्युपायेन सर्वान् ज्ञातुं प्रभवति। व्याकरणे अकारान्तस्य एवं, इकारान्तस्य एवं इति प्रक्रिया निर्दिष्टा। तेन सर्वं - अकारान्तशब्दानां, सर्व - इकारान्त-शब्दानां च रूपाणि ज्ञातुं प्रभवति । अतः व्याकरणमध्येयम् ।

५. असंदेहः —

असन्देहार्थं अध्येयं "स्थूलपृषतीं अनड्वाहीं आलभेत" इत्यादौ स्थूला च सा पृषती च इति कर्मधारयो वा, स्थूलानि पृषन्ति यस्याः सा इति बहुव्रीहि र्वा इति सन्देहं प्राप्नोति अवैयाकरणः । वैयाकरणस्तु उदात्तादि स्वरान् दृष्ट्वा अत्र बहुव्रीहिः इति अत्र कर्मधारयः इति च निश्चिनोति अवैयाकरणस्य तु संदेहः न निवर्तते ।

एवं अप्रधानप्रयोजनानि च त्रयोदश निरूपितानि । अत एव "काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्" इति उक्तम् । शक्तिग्रहं व्याकरणात् भवतीति तार्किकैरपि प्रथमं स्थानं दत्तम् । प्रथमे हि विद्वांसो वैयाकरणाः इति ध्वनिकारेणाप्युक्तम् ।

इति शम् ।



# मणिनागेश्वरस्तोत्रम्

शिवशङ्कर चन्द्रशेखर हिमशैलेन्द्रसुतेश धूर्जटे ।
मणिनागविभूषितेश्वरं मणिनागेश्वर त्वैव संश्रये ॥ १

जगदीश्वर पाहि पाहि मां शरणं ते चरणाम्बुजं गतम् ।
घटते किमुपेक्षितुं सुतं शरणार्थं पदयो रुपागतम् ॥ २

स्मृत एव जनार्तिनाशकः परिचर्यारत पारिजातकः ।
शरणं तव प्रार्थयेऽनिश न हि मेऽन्या गतिरीश त्वदृते ॥ ३

वृषवाहन पार्वतीपते भव कैलासपते भवान्तक ।
शरणागतवत्सलो भवान् कुरु मां दीनजनं हि निर्भयम् ॥ ४

शशिसूर्यहुताशनेक्षणो धृतमौलीन्दुसुरापगः शिवः ।
मणिभूषित नागमण्डनोऽवतु मां भस्मविभूषणः सदा ॥ ५

जगतो भवकारणं भवान् परिपासीश त्वमेव तत्सदा ।
प्रलये त्वयि याति तल्लयं गुणहीने त्रिगुणात्मनि प्रभो ॥ ६

अगुणः सगुणो हि दृश्यसे श्रुतिवाक्यैरपि त्वं न ज्ञायसे ।
तव नाथ कथं भवाम्यहं स्तवने पामरधीः उमाविभो ॥ ७

जितदानवदेवमानुषो मघवोत्साहितपञ्चसायकः ।
विकृतिं जनयन्त्वयीश्वरे तव नेत्रानल भस्मसात्कृतः ॥ ८

भवते भवजन्मकारिणे मखभागं न ददौ प्रजापतिः ।
निधनं गमितः स ब्रह्मजस्त्वयि क्रुद्धे कुशली हि को भवेत् ॥ ९

शिखरीन्द्रसुतेश रक्ष मां भवसिन्धौ पतितं सुदुस्तरे ।
कृपया नय मां कृपाकर भवपारं भुजगेन्द्रभूषण ॥ १०

असुरा अपि निर्दयाश्च ये द्युतिक्रूरा अनुकम्पिता मुहुः ।
किमितीश दयां तनोषि नो तव दासोपरि हे दयानिधे ॥ ११

सितहास्यरुचाऽभिभूषितं तव फुल्लांबुजनेत्र माननम् ।
न कदाप्यपयातु मानसात् मणिनागेश्वर सैव प्रार्थना ॥ १२

---

* सौराष्ट्रे 'ध्रांगध्रा' नाम्नि नगरे मणिनागेश्रमन्दिरं वर्तते । तत्र त्यस्य ग्रामदेवस्य मणिनागेश्वरस्येदं स्तोत्रम् ।

# श्रीमध्वाचार्यः

"अबरः"

[पूर्वानुबन्धः]

क्षेत्रं च सस्यश्यामलमभूत्। गुरुः परमानन्दभरितः "वत्स! भगीरथः स्वर्गगां भुवमानीय पितृणां अक्षयतृप्तिमिव त्वं मदीयक्षेत्रं तटाकजलमानीय मम चिरकालवाञ्छितं पूर्णमकार्षीः। नेतः परं त्वया मे गुरुदक्षिणा देयाऽस्ति। मया बोधिता विद्या सुक्षेत्रं गतं बीजमिव त्वयि प्रवर्धताम्। इतो गृहं गतः त्वं गार्हस्थ्यं स्वीकुरु; धनं चार्जय, पितृपोषणनिरतः सन् दीर्घायुष्मान् भवेत्याशीर्वाद पुरस्सरं वासुदेवं समावर्तयामास।

(३) सन्यासः —

गुरुकुलात्प्रतिनिवृत्तस्य वासुदेवस्य षोडशवर्षाः अतीताः। पितरौ तस्य विवाहप्रयत्नं कुर्वन्तौ वास्ताम्। परन्तु वासुदेवस्य हृदयं ऐतरेयोपनिषत्प्रतिपाद्ये सर्वोत्तमे हरावेव लग्नमासीत्। महाभारते नारायणसमं नास्तीति प्रोक्तम्। सर्वोपनिषत्प्रतिपाद्यः परब्रह्मस्वरूपः नारायण एव। स एव विश्वस्रष्टा, जगद्रक्षकः, मोक्षप्रदश्च। सर्वैः स एव सेव्यः मोक्षकाङ्क्षिभिः इति विश्वासवतः वासुदेवस्य सर्वव्यापी विष्णुरेव सर्वत्र दृश्यमान आसीत्। स "हरिभ्यो नमः" इति दशभ्यो दिग्भ्यः प्रणमन्नास्त। तद्दृष्ट्वा माता तं "वत्स! किमिदं! प्रणामैः कालं गमयसि। युक्ते वयसि अस्मान् रक्षिष्यसि इति विश्वासेन खलु वयं वर्तामहे। यद्येवं त्वं जडवदुन्मत्तवत् भ्रमसि, तर्हि का गतिरस्माकं" इति

प्रबोधयामास । एवं शतशः सहस्रशः प्रोक्तोऽपि स कर्णे अकृत्वा किमपि चिन्तयन् परध्यानेन आसीत् ।

वासुदेवः मातरं "अम्ब! अहं किं कुर्यां? सर्वत्र हरिरेव दृश्यमानो भवति । किमत्राश्चर्यं? श्रुतिस्मृति पुराणवचनैः प्रोक्तं "ब्रह्म सर्वव्यापी"ति तथ्यं मया अनुक्षण मनुभूयते । साक्षात्कृतस्य देवस्य प्रणामं अकृत्वा कथं स्थातुं शक्यते मया" इत्याह ।

तदा वेदवती "इतः परं नाऽय मुपेक्षणीयः; भक्तिभावना प्रचोदित स्सन्नयं सर्वं उपेक्ष्य साधुसंघे विलीयेत" इति भीता सती इमं विषयं भर्त्रे निवेदयामास । मध्यगेहभट्टः "मा भैषीः विवाहे कृते सर्वं समञ्जसं भविष्यति" इत्याह ।

वधू जननीजनकौ वरं द्रष्टु मागतौ । भट्टः "वासुदेव! इत्याहूय अलब्धसमाधानः पत्नी माह "क्व गतः सः? एते प्रतीक्षन्ते?" इति । साऽपि ससंभ्रमं "तदेव मयाऽप्यालोच्यते । आगतानां अतिथ्यविषये निमग्ना सती पुत्रविषयेऽसावधानाऽऽसम् । क्व नु गतः स्यात्सः?" इति ब्रुवन्ती भर्त्रा साकं सुतान्वेषणे प्रवृत्ता। वरं द्रष्टु मागताः सायं यावत् प्रतीक्षमाणाः अन्ते निराशा निरुत्साहाभ्यां प्रतिनिवृत्ताः ।

भट्टः "वासुदेवः उडिपिग्रामे दृष्ट इति" कस्य चिदुक्ति श्रुत्वा तत्र गतः । अत्र अच्युतप्रेक्षो नाम यतिः मठाधिपति रासीत् । भट्टः तत्सन्निधौ कुमारं ददर्श । वासुदेवः तस्य यतेः पादावभिवाद्य, "स्वामिन्! मम सत्यमार्गं दर्शये"ति प्रार्थयामास। अच्युतप्रेक्षः "श्रीमच्छङ्करभगवत्पादाः बहोः कालात्प्रागेव अद्वैतसिद्धान्तं प्रबोध्य सत्यमार्गं प्रदर्शयामासुः; तदीयं भाष्यं पठ्यताम्"

इत्याह । वासुदेवः "पठिष्यामि; अवश्यमेव सर्वानपि मतग्रन्थान् भवत्सन्निधौ अध्येष्यामि; मां शिष्यत्वेन परिगृह्य अनुगृह्णातु तत्र भवा"नित्याह । एतत्सर्वं शृण्वन् स्थितः भट्टः अच्युतप्रेक्षं प्रणम्य "यतिशेखर! अयं कुमारः मत्पुत्रः; वेदादि विद्याभ्यास-मकरोत् । गार्हस्थ्येन विधिना अनेन अस्मद्रक्षणपरेण भाव्यम् । वधू निश्चयोऽप्यस्माभिः कृतः जीवनार्थं सुक्षेत्राणि सन्ति । मद्वदेव अयमपि पौराणिको भूत्वा श्रोत्रपेयेन कर्णमाधुर्येण श्लोकपठन-पुरस्सरं प्रवचनं कर्तुं पाण्डित्यमस्ति; अनुमतश्चेत् नेष्यामीमं" इत्याह । अच्युतप्रेक्षः "आर्य! विद्यार्थी भूत्वा आगतं "गच्छ" इति अहं कथं ब्रूयाम्? त्वयैव स समाहितमना नेतव्य" इत्याह । वासुदेवः "तात! मम विद्याभ्यासस्य अन्तरायं कुतः कल्पयसि? इदनीं विवाहावसरः कः? जन्मवतः विवाहः सन्तानप्राप्तिश्चैव वा जीवितलक्ष्यम्?" इति प्रत्याह । भट्टः "नो चेत् किं वा भविष्यति? तवाग्रजयो र्मरणात् वंशोद्धारकं पुत्रं, पुन्नामकनरको-त्तरणार्थं भगवन्तं अनन्तेश्वरस्वामिनं प्रार्थ्य, त्वां लब्धवानस्मि । त्वमपि परिणीय काञ्चित्कन्यां, प्रजावान् भूत्वा वंशं विस्तारय निस्तारय चास्मान् नरकात् घोरात्, इत्याह वासुदेवः — "तथैव कर्तुं शक्यं, अस्तु, इतो मां विद्याभ्यासाय नियुज्य प्रस्थीयतां" इत्याह । भट्टः विश्वशस्सन् पाजकग्रामं प्रति निवृत्तः ।

वासुदेवः अच्युतप्रेक्षस्य शिष्यो भूत्वा अद्वैतग्रन्थान् सर्वान् सश्रद्ध मपठत् । पुनः पुनः तस्य तत्सिद्धान्तेषु संशया जायमाना आसन् । एकदा अच्युतप्रेक्षः — "परं ब्रह्म निर्गुणं, निष्क्रियं, निराकारं, इदमित्थमिति अनिर्वचनीयं च । किं परं ब्रह्म? कथं भूतं चेति प्रश्नस्य "नेति" इत्येव समाधानं भवितु मर्हति" इति बोधयन्नास्स ।

वासुदेवः संशयानस्सन् "गुरूत्तम! परं ब्रह्म निर्गुणं निराकारं निष्क्रियं च न भवितुमर्हति । तस्य अनन्तकल्याण गुणपूर्णत्वं वयं वर्णयितु मशक्ताः इत्येव सत्यम् । तावन्मात्रेण परं ब्रह्म निर्गुणमिति न वक्तुं शक्यते" इत्याह । अच्युतप्रेक्षः कुपितस्सन् "तर्हि श्रीमच्छङ्करभगवत्पादैरुक्तं असत्यमिति ब्रवीषि किं?" इत्याह । वासुदेवः "तैरुक्तं एतैरुक्तमिति हेतोः न ग्राह्यता, किन्तु सत्यान्वेषणदृष्टचा परिशील्य ग्राह्य" मित्याह । अच्युत-प्रेक्षः रोषकषायितेक्षणः सन् "किमुक्तं? सत्यान्वेषणदृष्टिर्वा? एतावान् अहङ्कारश्चेत्ते न किमप्यस्ति मत्सकाशेऽवगन्तव्यम् । अतो गम्यतां" इत्याह ।

वासुदेवः किं कर्तुमजानन् बहिरागतः तत्रत्यं मध्यगेहभट्टं दृष्ट्वा "तात! अनन्तेश्वरं संद्रष्टुं आगतः किम्?" इति पप्रच्छ । भट्टः "तव मात्रा प्रेषितोऽहं आगतः त्वां अपश्यन्त्याः तस्याः वर्षद्वयमतीतम् । पाजकग्रामः इतः योजनाधिकदूरेऽपि नाऽस्ति । एकवारमपि अस्मान् द्रष्टुं नागतोऽसि । अस्माभिः किमपराद्धं ते" इति सगद्गदमाह । वासुदेवः "आगम्यतां, पाजकग्रामं गच्छाम स्तावत्" इत्याह ।

वेदवती कुमारागमनेन सन्तुष्टा पर्वणीव तस्य शिरोऽभ्यञ्जनस्नानं विधाय मृष्टान्नपानीयैः सजगिंध (विन्दु - आन्ध्रचां) कल्पितवती । नववधू समागमेन प्रातिवेशिकगृहे प्रवर्तमानं आनन्दसन्दोहं प्रदर्शयन्ती माता पुत्रं गार्हस्थ्यं स्वीकर्तुं सानुरोधं अभिहितवती । पुत्रः स्वीयं चित्तक्षोभं मात्रे निवेद्य विवाह प्रस्तावं मा कार्षीरिति सानुनयं व्यजिज्ञपत् ।

[अनुवर्तते]



लोकसभासभ्यः



श्री पि. राजगोपालनायुडुमहोदयः
चित्तूरु संस्कृतभाषा प्रचारिण्याः सभायाः
उपाध्यक्षः

Please mention your membership Number for
easy correspondence.

---

*R. N. 1845/60.* *Postal C. T. R. 11.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-'65.
Licensed to Post without Prepayment. LICENCE No. 1.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५–००

---

## प्रहेलिका



पम्पासरसि रामेण सस्नेहं सविलासया ।
सीतया किं कृतं सार्धं मत्रैवोत्तर मीक्ष्यताम् ॥

कुञ्जी – "सस्ने" इति । ष्णा = शौचे । स्नात मित्यर्थः ।

---

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500.